टिप्पणी–( सुवर्णालंकृता ) सुष्टुवर्णेन कान्त्यालंकृता । ( विधवा ) विविधा धवाः पतयो यस्याः सा । जारिणीत्यर्थः ॥ १० ॥

अर्जुनस्य इमे बाणा नेमे बाणाः शिखण्डिनः ॥
सीदन्ति मम गात्राणि माघमासे गवा इव ॥ ११ ॥

टिप्पणी–( माघमासे गवा ) ' माघमा कर्कटी प्रोक्ता तदपत्यानि सेगवाः ' इत्युक्तेः कर्कट्या अपत्यानि यथा जन्मसमये तस्या अङ्गानि विदार्य बहिर्यान्ति तद्वदिमे बाणा ममाङ्गानि विदारयन्तीत्यर्थः ॥ ११ ॥

येनाकारि पराभूतिर्दिननायकसूनवे ॥
यद्गोत्रात्मभवाकान्तं तन्महः श्रेयसेऽस्तु वः ॥ १२ ॥

टिप्पणी–( पराभूतिः ) पराजयः ( पक्षे ) परा उत्कृष्टा भूतिरैश्वर्यम् ( दिननायकसूनवे ) कर्णाय सुग्रीवाय यमाय च । ( गोत्रात्मभवाकान्तं ) गास्त्रायन्ते गोपास्तेषामात्मभवा गोपिकास्तासां कान्तं मनोहरम् । अथ च गोत्रायाः पृथ्व्या आत्मभवा सीता सा कान्ता यस्य तत् । अथ च गोत्रस्य हिमालयस्यात्मभवा पार्वती सा कांता यस्य तत् ( तन्महः ) कृष्णाख्यं रामाख्यं शिवाख्यं च ॥ १२ ॥

विजितात्मभवद्वेषिगुरुपादहतो जनः ॥
हिमापहामित्रधरैर्व्याप्तं व्योमाभिनन्दति ॥ १३ ॥

टिप्पणी–विना गरुडेनामृतहरणसमये जित इन्द्रस्तदात्मभवोऽर्जुनस्तद्द्वेषी कर्णस्तद्गुरुः पिता सूर्यस्तत्पादहतस्तत्किरणसंतप्तः । हिमापहोऽग्निस्तदमित्रं पानीयं तद्धरा मेघाः । सूर्यकिरणसंतप्तो जनो मेघाच्छन्नमाकाशमभिनन्दतीति तात्पर्यार्थः ॥ १३ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

अट्टशूला जनपदा शिवशूलाश्चतुष्पथाः ॥
प्रमदा केशशूलिन्यो भविष्यन्ति कलौ युगे ॥१४॥

टिप्पणी-'अट्टमन्न शिवो वेदो ब्राह्मणश्च चतुष्पथः।
केशो भग इति प्रोक्तः शूलो विक्रय उच्यते' इति ॥१४॥

राजन्कमलपत्राक्ष ! तत्ते भवतु चाक्षयम् ॥
आसादयति यद्रूपं करेणुः करणैर्विना ॥ १५ ॥

टिप्पणी-(करेणुः) करणैर्विना ककार-रेफ-णकारैर्विना यद्रूपमासादयति प्राप्नोति तत्तेऽक्षयं भवत्वित्यन्वयः। उक्तव्यञ्जनत्रयरहितम् 'अ-ए-उः' इति स्वरत्रयम्। तत्र 'अ-ए' इत्यत्र वृद्धौ, 'ऐ-उः' इत्यत्र आयादेशे 'आयुः' इति सिद्धम् ॥ १५ ॥

अहं च त्वं च राजेन्द्र ! लोकनाथावुभावपि ॥
बहुव्रीहिरहं राजन्षष्ठीतत्पुरुषो भवान् ॥ १६ ॥

टिप्पणी-बहुव्रीहिपक्षे लोका (जना) नाथाः स्वामिनो यस्यैवंविधोऽहम्, याचकत्वात्। षष्ठीतत्पुरुषपक्षे लोकानां (जनानां) नाथ एवंविधस्त्वम्, राजत्वेन पालकत्वात् ॥ १६ ॥

अर्धरात्रे दिनस्यार्धे अर्धचन्द्रेऽर्धभास्करे ॥
रावणेन हृता सीता कृष्णपक्षे सिताष्टमी ॥१७॥

टिप्पणी-कृष्णपक्षे याऽष्टमी तस्य दिनस्यार्धे रावणेन सीता हृता। किं लक्षणाष्टमी ? अर्धरात्रे सिता। पुनः किंलक्षणाष्टमी? अर्धचन्द्रे। किंभूतेऽर्धचन्द्रे ? अर्धं भाः करोति अर्धभास्करस्तस्मिन् ॥ १७ ॥

शस्त्रं न खलु कर्तव्यमिति पित्रा नियोजितः ॥
तदेव शस्त्रं कृतवान् पितुराज्ञा न लंघिता ॥ १८ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

टिप्पणी–( नखलु ) नखांल्लुनानीति नखलु नखच्छेदकम् ॥१८॥

कुमारसंभवं दृष्ट्वा रघुवंशे मनोऽदधत् ॥
राक्षसानां कुलश्रेष्ठो रामो राजीवलोचनः ॥ १९ ॥

टिप्पणी–रघुवंशे कुलश्रेष्ठो राजीवलोचनो रामो राक्षसानां कुं ( पृथ्वीं ) मारयति ( पीडयति ) इति कुमारः। पृथ्वीपीडकइति यावत्। तादृशं संभवमुद्भवं दृष्ट्वा तत्र तेषां नाशे मनोऽदधत्। निश्चिकायेत्यर्थः॥१९॥

कान्ते ! धावय मे पादाविति भर्त्रा निवेदिता ॥
नतया धावितौ पादौ भर्तुराज्ञा न लंघिता ॥२०॥

टिप्पणी–( नतया ) नम्रीभूतया ॥ २० ॥

विहंगा वाहनं येषां त्रिकंचधरपाणयः ॥
पासालसहिता देवाः सदा तिष्ठन्तु ते गृहे ॥ २१ ॥

टिप्पणी–( विहंगा ) विः 'गरुडः', हंसः, गौ 'वृषभः'। ( त्रिकंच ) त्रिशूलः, कंबुः (शङ्खः), चक्रम्। ( पासाल ) पार्वती, सावित्री, लक्ष्मीः ॥ २१ ॥

देवराजो मया दृष्टो वारिवारणमस्तके ॥
भक्षयित्वार्कपर्णानि विषं पीत्वा क्षयं गतः ॥ २२ ॥

टिप्पणी–( देवराजो ) हे देवर ! अजच्छागः। ( वारिवारणः ) सेतुः। ( विषं ) पानीयम्। ( क्षयं ) वासः ॥ २२ ॥

विनायकपतेः शत्रुस्तस्य नाम षडक्षरम् ॥
पूर्वार्धं तव राजेन्द्र ! उत्तरार्धं तु वैरिणाम् ॥ २३ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

टिप्पणी–वीनां ( पक्षिणां ) नायको गरुडस्तस्य पतिर्विष्णुस्तस्य । षडक्षरं नाम 'हिरण्यकशिपुः'। हिरण्यं सुवर्णम् । कशिपुस्तल्पम् ( शय्या ) तत्र शत्रवो निद्रिस्ता भवन्त्विति भावः ॥ २३ ॥

रामरामेऽति रामेऽतिरमे रामे मनोरमे ॥
सहस्रनामतत्तुल्यं रामनाम वरानने ॥ २४ ॥

टिप्पणी–हे वरानने ! अहं रामे अतिरमे । कथंभूते रामे ? अतिरामे । अतिक्रान्ता रामा येनासौ तस्मिन् शुद्धे ब्रह्मणि । पुनः कथंभूते रामे ? मनोरमे । मनो रमयतीति तस्मिन् । कथंभूतः अहम् ? रामराः । राम एव रा ( द्रव्यं ) यस्य सः । यतः कारणान्मे ( मम ) सहस्रनामभिस्तुल्यं रामनाम अत ( इति कारणात् ) अथवा अहं रामे अतिरमे । कथंभूते रामे ? वरानने । वरमाननं यस्यासौ तस्मिन्, उत पार्वत्याः संबोधनं वा । कथंभूतं रामनाम । सहस्रनामतत् । सहस्रनाम तनोतीति सहस्रनामतत् । 'रमन्ते योगिनो यत्र परानन्दे चिदात्मनि । अतो रामपदेनासौ परं ब्रह्माभिधीयते' इति ॥ २४ ॥

तातेन कथितं पुत्र ! लेखं लिख ममाज्ञया ॥
नतेन लिखितो लेखः पितुराज्ञा न लोपिता ॥ २५ ॥

टिप्पणी–नतेन ( नम्रीभूतेन ) ॥ २५ ॥

यथा नयति कैलासं नगं गानसरस्वती ॥
तथा नयति कैलासं न गंगा न सरस्वती ॥ २६ ॥

टिप्पणी–गानसरस्वती यथा कैलासं नगं ( पर्वतं ) नयति तथा न गंगा, न सरस्वती प्रापयति ॥ २६ ॥



CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

अम्बरमम्बुनि पत्रमरातिः पीतमहीनगणस्य ददाह ॥
यस्य वधूस्तनयं गृहमब्जा पातु स वो हरलोचनवह्निः॥२७

टिप्पणी–स कृष्णो वो युष्मान्पातु। यस्याम्बरं पीतम्। यस्य गृहमम्बुनि। यस्य पत्रं वाहनं अहीनगणस्यारातिर्गरुडः। यस्य वधूरब्जा (कमला)। यस्य तनयं हरलोचनवन्हिः ददाह ॥ २७ ॥ ॥

लम्बोदर ! तव चरणावादरतो यो न पूजयति॥
स भवति विश्वामित्रो दुर्वासा गौतमश्चेति॥ २८ ॥

टिप्पणी–( विश्वामित्रो ) जगतः शत्रुः। ( दुर्वासा ) मलिनवस्त्रः ( गौतमः ) पशुः ॥ २८ ॥

अतनुज्वरपीडितासि बाले! तव सौख्याय मतो ममोपवासः
रसमर्पय वैद्यनाथ ! नाहं भवदावेदिलंघने समर्था ॥ २९ ॥

टिप्पणी–अतनु ( महान् ), ( पक्षे ) कामः। उपवासः ( लंघनम् ), ( पक्षे ) समीपस्थितिः। रसम् ( भेषजम् ), ( पक्षे ) प्रीतिम्। लंघने ( उपवासे ), ( पक्षे ) उल्लंघने ॥ २९ ॥

वायुमित्रसुतबन्धुवाहनारातिभूषणशिरोवलम्बिनी ॥
तज्जवैरिभगिनीपतेः सखा पातु मां कमललोचनो हरिः ॥३०

टिप्पणी–वायुमित्रमग्निस्तत्पुत्रः षण्मुखस्तद्बन्धुर्गजाननस्तद्वाहनं मूषकस्तदरातिः सर्पस्तद्भूषणः शिवस्तच्छिरोवलंबिनी गंगा तज्जो भीष्मस्तद्वैरी शिखण्डी तद्भगिनी द्रौपदी तस्याः पतिरर्जुनस्तत्सखा कृष्णः ॥ ३० ॥

नदीज ! लंकेशवनारिकेतुर्नगाह्वयो नाम नगारिसूनुः ॥
एषोऽङ्गनावेषधरः प्रमाथी जित्वा वयं नेष्यति चाद्य गावः ३१

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

टिप्पणी–भो नदीज (गंगातनय भीष्म)! एष दृश्यमानः अङ्गनावेषधरः स्त्रीरूपधारी लंकेशवनारिकेतुः रावणवनभजकहनुमद्ध्वजः नगाह्वयोऽर्जुननामा। नगारिसूनुरिन्द्रपुत्रः। भो भोः कौरवाः! अयं प्रमाथी हन्ता। अद्य वो युष्माञ्जित्वा गाश्च नेष्यतीत्यर्थः ॥ ३१ ॥

गोगजवाहनभोजनभक्ष्योद्भूतपमित्रसपत्नजशत्रोः ॥
वाहनवैरिकृतासनतुष्टा मामिह पातु जगत्त्रयजुष्टा॥३२॥

टिप्पणी–गवा गच्छतीति गोगः शिवस्तज्जः कार्तिकेयस्तद्वाहनं मयूरस्तस्य भोजनं (भक्ष्यं) सर्पस्तस्य भक्ष्यं वायुस्तद्भूतो हनूमांस्तं पातीति सः तत्पः, सुग्रीवस्तस्य मित्रं रामस्तस्य सपत्नो रावणस्तज्ज इन्द्रजित्तस्य शत्रुरिन्द्रस्तस्य वाहनं ऐरावतस्तस्य वैरी सिंहस्तत्रोपविष्टा अत एव सर्वोपरि तुष्टा अम्बिका मां पातु (रक्षतु) ॥ ३२ ॥

रामं सीतां लक्ष्मणं जीविकार्थे
विक्रीणीते यो नरस्तं च धिग्धिक्!! ॥
अस्मिन्पद्ये योऽपशब्दान्न वेत्ति
व्यर्थप्रज्ञं पण्डितं तं च धिग्धिक्!! ॥ ३३ ॥

टिप्पणी–'जीविकार्थे चापण्ये' इत्यत्र आपण्ये इत्युक्तत्वाद्धस्तिकान्विक्रीणीते इत्यत्रेव रामकं सीतकां लक्ष्मणकं इति प्रयोगा एव साधवः ॥ ३३ ॥

अहिरिपुपतिकान्ता तातसंबद्धकान्ता-
हरतनयनिहन्तृप्राणदातृध्वजस्य ॥
सखि सुतसुतकान्तातातसम्पूज्यकान्ता
पितृशिरसि पतन्ती जाह्नवी नः पुनातु॥३४॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

टिप्पणी—अहिः सर्पस्तद्रिपुर्गरुडस्तत्पतिर्विष्णुस्तत्कान्ता लक्ष्मीस्तत्तातः समुद्रः स सम्यग्बद्धो येन स रामस्तत्कान्ता जानकी, तस्या हरो हर्ता रावणस्तत्तनय इन्द्रजित्तन्निहन्ता लक्ष्मणस्तत्प्राणदाता हनूमान्स ध्वजे यस्यैतादृशोऽर्जुनस्तस्य सखा कृष्णस्तत्सुतो मदनस्तत्सुतोऽनिरुद्धस्तत्कान्ता उषा तत्तातो बाणासुरस्तस्य सम्यक् पूज्यः शिवस्तत्कान्ता पार्वती तत्पिता हिमालयस्तच्छिरसि पतन्ती जान्हवी ( भागीरथी ) नः ( अस्माकम् , पुनातु ( रक्षतु ) ॥ ३४ ॥

कान्ता रुचिं मुनिजनस्तरुणाऽवियोगी
कामश्च रत्नमणिरुज्ज्वलकङ्कणेन ॥
धत्ते पयोधरयुगे कुचभूषणेन
हारे हरे हिमकरे मकरे करे च ॥ ३५ ॥

टिप्पणी—कान्ता हारे रुचिं धत्ते, मुनिजनो हरे रुचिं धत्ते, अवियोगी तरुणो हिमकरे रुचिं धत्ते, कामो मकरे निजचिन्हभूते रुचिं धत्ते, रत्नमणिरुज्ज्वलकंकणेन सह करे कुचभूषणेन सह पयोधरयुगे च रुचिं धत्ते ॥ ३५ ॥

सर्वज्ञः सन्वदसि बहुधा दीयते दीयते वै
दाधातूनां भवति सदृशं रूपमेषां चतुर्णाम् ॥
द्वौ दानार्थौ भवति च तथा पालने खण्डने वा
नो जानीमः कथयति भवान्कस्य धातोः प्रयोगम् ॥

टिप्पणी—त्वं सर्वज्ञः सन् बहुधा वारं वारं 'दीयते दीयते' इति वदसि । 'दीयते' इति रूपं चतुर्णामपि दाधातूनां सदृशं भवति । तन्मध्ये द्वौ दानार्थौ—'दाण्दाने, डुदाञ् दाने' इति । एकः पालने—'देङ् रक्षणे'

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

इति । एकः खण्डने–' दोऽवखण्डने ' इति । एतन्मध्ये भवान् कस्य धातोः प्रयोगं कृत्वा वदसि तं न जानीमः ॥ ३६ ॥

गौरीक्षणं भूधरजाऽहिनाथः पत्रं तृतीयं दयितोपवीतम् ॥
यस्यांबरं द्वादशलोचनाख्यः काष्ठासुतः पातु सदाशिवो वः

टिप्पणी–सः सदाशिवो वो युष्मान्पातु । सः कः ? यस्य गौः ( वृषभः ) पत्रं वाहनम्, तथा ईक्षणं तृतीयं यस्य । भूधरजा ( पार्वती ) दयिता यस्य । अहिनाथः ( शेषः ) उपवीतं यस्य । अंबरं ( वस्त्रं ) काष्ठाः ( दिशो ) यस्य । द्वादशलोचनाख्यः कुमारः ( सुतो ) यस्य इत्यन्वयः ॥ ३७ ॥

अब आगे उन श्लोकोंको लिखेंगे कि जिनमें क्रिया, कर्ता, कर्म, करण, संप्रदान, अपादान, संबन्ध, अधिकरणआदि गुप्त हैं. यदि नहीं समझमें आवै तो अर्थ नहीं समझमें आ सकता है, कि श्लोकका क्या आशय है. यहांभी केवल दो श्लोकोंका भाषाऽनुवाद, लिखकर शेष श्लोकोंका आशय समझनेके अर्थ संक्षिप्त टिप्पणी लिख देंगे. क्योंकि, केवल भाषा जाननेवालोंको इन श्लोकोंमें कुछ आनन्द नहीं होता है. और संस्कृतजाननेवालोंको केवल टिप्पणीही लिख देना उचित समझा है ॥

क्रियागुप्त–श्लोकाः ।

सन्ध्यावन्दनवेलायां तडागान्ते द्विजोत्तमैः ॥
अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः ॥ १ ॥

टिप्पणी–हे द्विजोत्तम ! सन्ध्यावन्दनवेलायां तडागान्ते ' ऐः ( आगच्छ ) ॥ १ ॥

भाषार्थ–हे द्विजोत्तम ! सध्यावदनके समयमें तडाग ( सरोवर ) के तटपर आओ. यहां ' ऐः ' यह ' इ गतौ ' इस धातुका क्रियापद गुप्त है. इस श्लोकमें गुप्त क्रियापदको जो जानता है वह पंडित है ॥ १ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

विराट नगरे राजन् ! कीचकादुपकीचकम् ॥
अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः ॥ २ ॥

टिप्पणी–विः पक्षी । कीचकाद्वेणोः । कीचकान्तरं आट ( बभ्राम ) ॥ २ ॥

भावार्थ–हे राजन् ! नगरमें एक पक्षी एक वांससे दूसरे वांसपर भ्रमण करता भया. इस श्लोकमें ' अट गतौ ' धातुका ' आट ' यह क्रियापद गुप्त है. इसको जो जानता है वह पंडित है ॥ २ ॥

आगतः पाण्डवाः सर्वेऽदुर्यो धनसमीहया ॥
तस्मै गां च सुवर्णं च रत्नानि विविधानि च ॥३॥

टिप्पणी–यः धनसमीहया ( धनेच्छया ) आगतस्तस्मै सर्वे पाण्डवाः गां च सुवर्णं च विविधानि रत्नानि च ( अदुः ) ददतिस्म ३

पम्पासरसि रामेण सस्नेहं सविलासया ॥
सीतया किं कृतं ? सार्धमत्रैवोत्तरमीक्ष्यताम् ॥ ४ ॥

टिप्पणी–' सस्ने ' इति ' ष्णा शौचे ' कर्मणि लिट् ॥ ४ ॥

दामोदराय पुण्यात्मन् ! पुष्पमूलफलान्यपि ॥
अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः ॥ ५ ॥

टिप्पणी–हे दामोदर ! पुष्पमूलफलानि ' आय ' ( आनय ) । ' इटकिटकटी ' इत्यत्र प्रश्लिष्टस्य ईधातोराङ्पूर्वस्य लोटो रूपमिदम् । उपसर्गसमभिव्याहारेण आनयार्थकत्वम् ॥ ५ ॥

कान्तं विनानदीतीरं मदमालोक्य केकिनी ॥
अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः ॥ ६ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

टिप्पणी–केकिनी (मयूरी)। इरं (मदं) मेघज्योतिः। विद्युतमिति यावत्। आलोक्य 'विनानदीति' विशेषण पुनःपुनर्वा शब्दं करोतीत्यर्थः ॥ ६ ॥

नार सिंहाकृतिं वीक्ष्य वने मत्तमतंगजः ॥
अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः ॥ ७ ॥

टिप्पणी–मत्त गजः सिंहाकृतिं वीक्ष्य 'नार' (न जगाम)। ऋ गतौ, कर्तरि लिट् ॥ ७ ॥

बिम्बाकारं सुधाधारं कान्तावदनपङ्कजम् ॥
अत्र क्रियापदं गुप्तं मर्यादा दश वार्षिकी ॥ ८ ॥

टिप्पणी–कान्तावदनं 'दश' (चुम्बस्व) ॥ ८ ॥

पा मा रागाभिभूतस्य श्लेष्मव्याधिनिपीडित ! ॥
यदि ते जीवितस्येच्छा तदा भोः ! शीतलं जलम् ॥९॥

टिप्पणी–भो श्लेष्मव्याधिनिपीडित ! यदि जीवितस्येच्छा तर्हि शीतलं जलं 'मा पाः' (मा पिबेति) ॥ ९ ॥

राघव ! स्य शरैर्घोरैर्घोरंरावणमाहवे ॥
अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः ॥१०॥

टिप्पणी–हे राघव ! त्वं रावणं आहवे शरैः 'स्य' (मारय) इति ॥ १० ॥

अम्लानपङ्कजा माला कण्ठे रामस्य सीतया ॥
मुधा बुधा भ्रमन्त्यत्र प्रत्यक्षेपि क्रियापदे ॥ ११ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

टिप्पणी–' प्रत्यक्षेपि ' ( क्षिप्ता ) ॥ ११ ॥

कान्तया कान्तसंयोगे किमकारि नवोढया ? ॥
अत्रापि चोत्तरं वक्तुमवधिर्ब्रह्मणो वयः ॥ १२ ॥

टिप्पणी–' अत्रापि ' इति । त्रपूष् लज्जायाम् , कर्मणि लुङ् ॥१२॥

कर्तृगुप्त–श्लोकाः ।

राक्षसेभ्यः सुतां हृत्वा जनकस्य पुरीं ययौ ॥
अत्र कर्तृपदं गुप्तं मर्यादा दशवार्षिकी ॥ १३ ॥

टिप्प०–राक्षसानां ' इभ्यः ' स्वामी रावण जनकस्य सुतां सीतां हृत्वा पुरीं लंकां ययौ ॥ १३ ॥

व्या मोहं तव भिन्दन्तु छिन्दन्तु दुरितानि च ॥
कर्तृगुप्तमिमं श्लोकं ये जानन्ति विचक्षणाः ॥ १४ ॥

टिप्पणी–'उः' (शिवः), ' इः '( ब्रह्मा ),' अः ' (विष्णुः) इत्यनेन ' व्यः ' इति जातम् । तस्य बहुवचने ' व्याः ' (हरविधिहरयः) तव मोहं भिन्दतु, दुरितानि छिन्दन्तु । ये कर्तृज्ञास्ते विचक्षणाः ॥ १४ ॥

अन्नवस्त्रसुवर्णानि रत्नानि विविधानि च ॥
ब्राह्मणेभ्यो नदीतीरे ददाति व्रज सत्वरम् ॥ १५ ॥

टिप्पणी–हे ब्राह्मण ! ' इभ्यः ' ( समृद्धः ) ॥ १५ ॥

शरदिन्दुकुन्दधवलं नगपतिनिलयं मनो हरं देवम् ॥
यैः सुकृतं कृतमनिशं तेषामेव प्रसादयति ॥ १६ ॥

टिप्पणी–यैरनिशं सुकृतं कृतं तेषामेव ' मनः ' शरदिन्दुकुन्दधवलं नगपतिनिलयं देवं हरं प्रसादयति ॥ १६ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

न करोति नाम रोषं न वदति परुषं न हन्त्ययं शत्रून् ॥
रञ्जयति महीमखिलां तथापि धीरस्य वीरस्य ॥ १७ ॥

टि०—अयं पुरुषो रोषं न करोति, परुषं कठोरं न वदति, शत्रून्न हन्ति। नामेति प्रसिद्धम्। तथापि अस्य वीरस्य 'धीः' अखिलां महीं रंजयति ॥ १७ ॥

कर्मगुप्त—श्लोक।

एहि हे रमणि! पश्य कौ तुकं धूलिधूसरतनुं दिगम्बरम् ॥
सापि तद्वदनपङ्कजं पपौ भ्रातरुक्तमपि किं न बुध्यते? १८

टिप्पणी—हे रमणि! एहि, कौ (पृथिव्यां) तुकं (बालकं) धूलिधूसरतनुं दिगम्बरं पश्य ॥ १८ ॥

करणगुप्त—श्लोक।

पूतिपङ्कमयेत्यर्थं कासारे दुःखिता अमी ॥
दुर्वारा मानसं हंसा गमिष्यन्ति धनागमे ॥ १९ ॥

टिप्पणी—दुष्टं वाः जलं दुर्वाः। तेन 'दुर्वारा' (कलुषितजलेन) ॥१९॥

संप्रदानगुप्त—श्लोक।

अम्भोरुहमये स्नात्वा वापीपयसि कामिनी ॥
ददाति भक्तिसंपन्ना पुत्रसौभाग्यकाम्यया ॥ २० ॥

टिप्पणी—'अम्भोरुहमये' इत्यत्र 'अये' इः कामः तस्मै ॥२०॥

अपादानगुप्त—श्लोक।

सरसीतो यमुद्धृत्य जनः कं दर्पकारकम् ॥
पिबत्यम्भोजसुरभि स्वच्छमेकान्तशीतलम् ॥२१॥



CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

टिप्पणी–' सरसीतः ' ( सरोवरात् )। ' कं ' ( जलम् ) ॥ २१ ॥

संबन्धगुप्त–श्लोक ।

भा नुर्वै जायते लक्ष्म्या सरस्वत्याथवा मता ॥
अत्र षष्ठीपदं गुप्तं मर्यादा दशवार्षिकी ॥ २२ ॥

टिप्पणी–' भाः ' ( कान्तिः )। ' नुः ' ( नरस्य ) ॥ २२ ॥

याकटाच्छच्छटापातैः पवित्रयति मानवम् ॥
ए कान्ते शेपितप्रीतिरस्ति सा कमलालया॥ २३ ॥

अधिकरणगुप्त–श्लोक ।

टिप्पणी–' ए ' ( कृष्णे )। ' कान्ते ' ( भर्तरि ) ॥ २३ ॥

आमंत्रितगुप्त–श्लोक ।

वटवृक्ष महानेष मार्गमावृत्य तिष्ठति ॥
तावत्त्वया न गतव्यं यावन्नान्यत्र गच्छति ॥ २४ ॥

टिप्पणी–बवयौरैक्यात् हे ' बटो ' ( ब्राह्मण ) ! । ' ऋक्षः ' ( भल्लूकः ) ' आवृत्य ' ( रुद्ध्वा ) ॥ २४ ॥

पिबतस्ते शरावेण ! वारि कह्लारशीतलम् ॥
केनेमौ दुर्विदग्धेन हृदये संनिरोपितौ? ॥ २५ ॥

टिप्पणी–हे ' एण ' ( मृग ) ! कल्हारशीतलं वारि उदकं पिबतः ते हृदये केन दुर्विदग्धेन इमौ शरौ बाणौ संनिरोपितौ इत्यन्वयः ॥ २५ ॥

कर्तृक्रियागुप्त–श्लोक ।

घनघनाघनकान्तिघनोऽघनुद्दनुजपुञ्जमिनात्रिजगुर्विगः ॥
सकमलोऽपिनडर्धसमां क्रियामिहविलोकयितुं च सकर्तृकाम्

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

टिप्पणी—घनः सान्द्रः स चासौ, घनाघनः पर्जन्यश्च । तस्य कान्तिस्तद्वत् घनः सुन्दरः । घनवत्सुन्दर इत्यर्थः । तथा अघनुत् अघहन्ता । इनः सूर्यः, अत्रिजश्चन्द्रः तावेव गावौ नेत्रयुग्मे यस्य सः तथा विना गरुडेन गच्छतीति 'विगः' । कमलया लक्ष्म्या सह वर्तते इति । अतः विष्णुः रामावतारे कृष्णावतारे च दनुजपुंजं दैत्यनिचयं 'अपिनट्' चूर्णितवान् । अत्र श्लोके सकर्तृकां कर्त्रा सह वर्तमानां क्रियां क्रियापदं विलोकयितुं अर्धसमां अर्धवर्षं ददामीति श्लोककर्ता प्रतिज्ञां करोति ॥ २६ ॥

कर्तृकर्मक्रियागुप्त-श्लोक ।

भवानिशं करोमेशं प्रति पूजापरायणः ॥
कर्तृकर्मक्रियागुप्तं यो जानाति स पण्डितः ॥ २७ ॥

टिप्प०—हे 'कर !' 'उमेशं' प्रति अनिशं पूजापरायणो भव ॥ २७ ॥

संधिगुप्त-श्लोक ।

न मयागोरसाभिज्ञं चेतः कस्मात्प्रकुप्यसि ? ॥
अस्थानरुदितैरेतैरलमालोहितेक्षणे ॥ २८ ॥

टिप्पणी न निषेधः । मे मम आगोरसाभिज्ञमिति पदच्छेदः । मे चेतः आगोरसाभिज्ञं अपराधरसाभिज्ञं नेत्यर्थः ॥ २८ ॥

समासगुप्त-श्लोक ।

नित्यमाराधिता देवैः कंसस्य द्विषतस्तनुः ॥
मण्डलाग्रे गदाशंखं चक्रं जयति बिभ्रती ॥ २९ ॥

टि०—नित्यं देवैः आराधिता । (पक्षे) नित्यं मा लक्ष्मीर्यस्यां सा नित्यमा । देवैः राधिता । बहुव्रीहिसमासः ॥ २९ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

लिङ्गगुप्त-श्लोक ।

नितान्तस्वच्छहृदयं सखि ! प्रेयान्समागतः ॥
त्वां चिराद्दर्शनप्रीत्या यः समालिङ्ग्य रंस्यते ॥ ३० ॥

टि०-अयं नितान्तमतिशयेन स्वच्छं निर्मलं हृत् हृदयं यस्य सः नितान्तस्वच्छहृत् प्रेयान् समागतः । पुलिङ्गनिर्देशः ॥ ३० ॥

सुप्वचनगुप्त-श्लोक ।

प्रमोदंजनयत्येव सदा रा गृहमेधिनः ॥
यदि धर्मश्च कामश्च भवेतां संगताविमौ ॥ ३१ ॥

टि०-'सदारा' इत्यत्र 'रा' इति प्रथमैकवचनं सुबन्तम् । 'गृहमेधिन' इति षष्ठी ॥ ३१ ॥

तिङ्वचनगुप्त-श्लोक ।

कस्मात्त्वं दुर्बलासीति सख्यस्तां परिपृच्छति ॥
त्वयि संनिहिते तासु दद्यात्कथय सोत्तरम् ॥ ३२ ॥

टि०-अतिशयेन पृच्छतीति परिपृच्छति । 'इति' यङ्लुगन्ते अन्तिपरतो रूपमस्ति । इदमेव रूपमेकवचनं ज्ञायते । न तु बहुवचनेन । इति तिङ्वचनगुप्तम् ॥ ३२ ॥

अन्तरालाप-श्लोकाः ।

सीमन्तिनीषु का शान्ता ? राजा कोऽभूद्गुणोत्तमः ? ॥
विद्वद्भिः का सदा वन्द्या ? अत्रैवोक्तं न बुध्यते ॥ १ ॥

भावार्थ-स्त्रियोंमें कौन शान्त है ? राजा कौन गुणोत्तम ( उत्तमगुणवाला ) हुवा ? विद्वानोंकरके कौन सदा वन्दना करने योग्य है ?

---

अन्तरालाप उसको कहते हैं जिसका उत्तर उसीमें होवै ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

इन तीनौंका उत्तर इसी श्लोकमें कहा है परन्तु जाननेमें नहीं आता. यहां श्लोकके चरणका आदि और अन्तका ऐसे दोनौं अक्षर मिलाकर उत्तर है. जैसे-सीता, राम, विद्या ॥ १ ॥

कः खे चरति ? का रम्या ? का जप्या ? किं विभूषणम् ? ॥
को वन्द्यः ? कीदृशी लंका ? वीरमर्कटकम्पिता ॥ २ ॥

भावार्थ-इस श्लोकमें तीन चरणोंका उत्तर चौथे चरणमें है. यथा-खे कः चरति ? (आकाशमें कौन विचरता है)? विः (पक्षी)। रम्या का ? (रमणीय कौन है)? रमा (लक्ष्मी)। जप्या का ? (जपने योग्य क्या है)? ऋक् (ऋग्वेद)। विभूषणं किम् ? (आभूषण क्या है)? कटकम् (कंकण)। वन्द्यः कः ? पिता (जन्मदाता)। लंका कीदृशी ? (लंका कैसी है)? वीरमर्कटकम्पिता (हनुमदादिवीर वानरोंकरके नाश की गई) ॥ २ ॥

युधिष्ठिरः कस्य पुत्रो ? गंगा वहति कीदृशी ? ॥
हंसस्य शोभा का वास्ति ? धर्मस्य त्वरिता गतिः॥ ३॥

भावार्थ-इस श्लोकके भी तीन चरणोंके उत्तर चौथे चरणमें है. यथा-युधिष्ठिरः कस्य पुत्रः ? (युधिष्ठिर किसका पुत्र है)? धर्मस्य (धर्मराजका)। गंगा कीदृशी वहति ? (गंगा कैसी वहती है)? 'त्वरिता' (शीघ्रतापूर्वक)। हंसस्य शोभा का वास्ति (हंसकी शोभा क्या है)? गतिः (चाल) ॥ ३ ॥

भोजनान्ते च किं पेयं ? जयन्तः कस्य वै सुतः ? ॥
कथं विष्णुपदं प्रोक्तं ? तक्रं शक्रस्य दुर्लभम् ॥ ४ ॥

भावार्थ-यहांभी तीन चरणोंका उत्तर चौथे चरणमें है. यथा-'तक्रं

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

शक्रस्य दुर्लभम् ’। भोजनके अन्तमें क्या पीवै ? छाछ। जयन्त किसका पुत्र है ? इन्द्रका। विष्णुपद कैसा कहा है ? दुर्लभ ॥ ४ ॥

कस्तूरी जायते कस्मात्? को हन्ति करिणां कुलम् ?॥
किं कुर्यात्कातरो युद्धे ? मृगात्सिंहः पलायनम् ॥ ५ ॥

भावार्थ–तीनचरणोंका उत्तर चौथे चरणमें है. यथा–कस्तूरी कस्माज्जायते ? मृगात्। (कस्तूरी किससे उत्पन्न होती है ? हरिणसे) करिणां कुलं को हन्ति ? सिंहः। (हाथियोंके कुलको कौन मारता है ? सिंह) कातरो युद्धे किं कुर्यात् ? पलायनम्। (कायर मनुष्य युद्धमें क्या करता है ? पलायन) ॥ ५ ॥

कं संजघान कृष्णः ? का शीतलवाहिनी गंगा ? ॥
के दारपोषणरताः ? कं बलवन्तं न बाधते शीतम् ?॥६॥

भावार्थ–इस श्लोकमें प्रतिचरणका उत्तर उसी चरणमें है. यथा–कृष्णः कं संजघान ? (कृष्णने किसको मारा) ? कंसम् (कंसको)। शीतलवाहिनी गंगा का ? (कहांकी गंगा शीतल वहनेवाली है) ? काशीतलवाहिनी (काशीके नीचे वहनेवाली)। दारपोषणरताः के ? (दारपोषणमें रत कौन हैं) ? केदारपोषणरताः (केदार पोषणमें रत हैं)। शीतं कं बलवन्तं न बाधते ? (शीत, किस बलवान् को नहीं सताता है ?) कंबलवतम् (कंबलवालेको) अर्थात् जो कंबल ओढे है उसको शीत नहीं सताता ॥ ६ ॥

का लोकमाता?किमु देहमुख्यं?रतेः किमादौ कुरुते मनुष्यः?
को दैत्यहन्ता ? वद वैक्रमेण गौरीमुखं चुम्बति वासुदेवः॥७॥

१ ‘का काली ? का मधुरः ?’ इति पाठान्तरम्। काली का? काकअली। काली काली वस्तु क्या है ? कौवा और बीछी तथा काली। मधुरः का ? कामधुरः। मधुर क्या है ? कामदेव।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

भाषार्थ-तीनचरणोंका उत्तर चौथे चरणमें है. यथा-( गौरीमुखं चुंबति वासुदेवः )। लोकमाता का ? गौरी। ( लोककी माता कौन है ? गौरी अर्थात् पार्वती )। देहमुख्यं किमु ? मुखम्। ( देहमें मुख्य क्या है ? मुख )। रतेरादौ मनुष्यः किं कुरुते ? चुंबनम्। ( रतिके आदिमें मनुष्य क्या करता है ? चुम्बन )। वैक्रमेण दैत्यहन्ता को वद। वासुदेवः ( अपने पराक्रमसे दैत्योंको मारनेवाला कौन है सो कहो. वासुदेव हरि भगवान् ) ॥ ७ ॥

का शैलपुत्री ? किमु नेत्ररम्यं ? शुभार्भकः किं कुरुते फलानि ?
मोक्षस्य दाता स्मरणेन को वा ? गौरीमुखं चुम्बति वासुदेवः॥

भाषार्थ-इस श्लोककेभी तीन चरणोंमेंके चार प्रश्नोंका उत्तर चौथे चरणमें है. यथा-शैलपुत्री का ? ( हिमाचलकी पुत्री कौन है ) ? गौरी ( पार्वती )। नेत्ररम्यं किमु ? ( नेत्रोंकी शोभाका स्थान कौनसा है ) ? मुखम् ( मुख )। शुभार्भकः फलानि किं कुरुते ? ( सुन्दर बालकको गोदमें लेकर मनुष्य क्या करता है ) ? चुम्बति ( चुम्बन करता है )। स्मरणेन मोक्षस्य दाता कः ? ( स्मरण करनेसे मोक्ष देनेवाला कौन है ) ? वासुदेवः ( हरि भगवान् ) ॥ ८ ॥

का शंभुकान्ता ? किमु चन्द्रकांतं ?
कान्तामुखं किं कुरुते मनुष्यः ? ॥
कः श्रीपतिः ? का विषमा समस्या ?
गौरीमुखं चुम्बति वासुदेवः ॥ ९ ॥

भाषार्थ-इस श्लोकमेंभी पांच प्रश्नोंका उत्तर चौथे चरणमें है. यथा-शम्भुकान्ता का ( शिवजीकी स्त्री कौन है ) ? गौरी ( पार्वती )। किमु

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

चन्दकान्तम्? (चन्द्रमाके समान शोभावाला क्या है)? मुखम् (मुख)। मनुष्यः कान्तामुखं किं कुरुते? (स्त्रीके मुखकोमनुष्य क्या करता है)? चुंबति (चुम्बन करता है)। कः श्रीपतिः? (लक्ष्मीपति कौन हैं)? वासुदेवः (वासुदेव)। विषमा समस्या का? (कठिन समस्या कौनसी है)? गौरीमुखं चुंबति वासुदेवः (गौरीके मुखको वासुदेव चुबन करता है) ९

**के भूषयन्ति स्तनमण्डलानि कीदृश्युमा चन्द्रमसः कुतः श्रीः किमाह सीता दशकंठनीता हा राम हादेवरतातमातः १०**

भावार्थ—इस श्लोकके तीनचरणोंमेंके चार प्रश्नोंका उत्तर चौथे चरणमें कहा है यथा—" १ हारा, २ महादेवरता, ३ तमातः (रात्रितः), ४ हा-राम! हा देवरतातमातः!" स्तनमण्डलानि के भूषयन्ति? (स्तनमंडल-पर कौन सुशोभित होते हैं)? हाराः (मोतियोंके हार, रत्नोंके हार अथवा फूलोंके हार)। कीदृश्युमा? (कैसी है पार्वती)? महादेवरता (महादेवजीमें रत)। चन्द्रमसः कुतः श्रीः? (चन्द्रमाकी शोभा किससे है)? तमातः (रात्रितः) (रात्रिसे)। दशकंठनीता सीता किमाह? (रावणसे हरण की हुई सीता क्या कहती हुई)? हाराम! हा देवरतातमातः! (हाराम! हा देवर! हा पिता! हा मातः इसप्रकार विलाप करती भई)॥ १०॥

**व्रजन्ति पद्मानि कदा विकासं? प्रियागते भर्तरि किं करोति? रात्रौ च नित्यं विरहाकुला का? सूर्योदये रोदिति चक्रवाकी**

भावार्थ—इस श्लोकमें तीन चरणोंमेंके तीन प्रश्नोंका उत्तर चौथे चरणमें है. यथाकमल किस समय प्रफुल्लित होते हैं? सूर्यके उदयमें। पतिके चले जानेपर प्यारी क्या करती है? रोती है। रात्रिमें प्रतिदिन विरहसे आकुल कौन है? चकवी। (रातमें चकवाचकवीका वियोग हो जाता है॥ ११॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

रवेः कवेः किं समरस्य सारं कृषेर्भयं किं किमुशंति भृंगाः
खलाद्भयं विष्णुपदं च केषां भागीरथीतीरसमाश्रितानाम्॥

भावार्थ-इस श्लोकके तीनचरणोंमेंके सात प्रश्नोंका उत्तर चौथे चरणमें है. यथा-"१ भाः (कांतिः), २ गीः (वाणी), ३ रथी (योद्धा), ४ ईतिः (अनावृष्ट्यादिः), ५ रसम् (पुष्परसम्), ६ आश्रितानाम्, ७ भागीरथीतीरसमाश्रितानाम्।" सूर्यका सार क्या है? कान्ति। कविका सार क्या है? वाणी। समरका सार क्या है? योद्धा। कृषि (खेती) को भय क्या है? अनावृष्टि आदि। भ्रमर क्या चाहते हैं? रस। खल (दुर्जन) से भय किनको है? आश्रितोंको, अर्थात् जो मनुष्य दुर्जनके आश्रय रहते हैं उनको। विष्णुपद (स्वर्ग) किनको प्राप्त होता है? भागीरथीतीरआश्रयवालोंको, अर्थात् गंगाजीके तटपर वास करनेवालोंको॥ १२॥

सन्तश्च लुब्धाश्च महर्षिसंघा विप्राः कृषिष्ठा खलु माननीयाः।
किं किं समिच्छन्ति तथैव सर्वे नेच्छन्ति किं? माधवदाघयानम्

भावार्थ-इस श्लोकमेंके सात प्रश्नोंका उत्तर श्लोकांतके सात अक्षरोंमें दिया है. तहां प्रथम छे प्रश्नोंके उत्तर क्रमसे छे अक्षरोंमें 'नम्' यह मिलाकर दिये हैं. और सातवें प्रश्नका उत्तर सातौ अक्षर मिलकर दिया है. यथा-१ मानम्, २ धनम्, ३ वनम्, ४ दानम्, ५ घनम्, (मेघम्), ६ यानम्, ७ माधवदाघयानम्। माधवे (वैशाखे) दाघः (ऊष्मा) तस्मिन् (यानम्) गमनम्। १ सन्तः, २ लुब्धाः, ३ महर्षिसंघाः, ४ विप्राः, ५ कृषिष्ठाः, ६ माननीयाः किं किं समिच्छन्ति? ७ तथैव सर्वे किं नेच्छन्ति? "माधवदाघयानम्"। सन्तजन क्या चाहते हैं? मान। लोभीजन क्या चाहते हैं? धन। महर्षिगण क्या



CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

चाहते हैं ? वन । विप्रलोग क्या चाहते हैं ? दान । खेती करनेवाले लोग क्या चाहते हैं ? घन ( मेघ ) । माननीय पुरुष क्या चाहते हैं ? यान ( सवारी ) । तथा सब क्या नहीं चाहते हैं ? वैशाखमासमें गरमीके समय गमन ॥ १३ ॥

किं भूषणं सुंदरसुंदरीणां ?
किं दूषणं पांथजनस्य नित्यम् ? ॥
कस्मिन्विधात्रा लिखितं जनानां ?
सिन्दूरबिन्दुर्विधवाललाटे ॥ १४ ॥

भावार्थ–इस श्लोकके तीन चरणोंमें तीन प्रश्न कर उनका उत्तर चौथे चरणमें दिया है. यथा–" १ सिन्दूरबिन्दुः, २ विधवा, ३ ललाटे " । सौभाग्यवती स्त्रियोंका सुन्दर आभूषण क्या है ? सिन्दूरबिन्दुः । पथिकजनको सदा दूषण क्या है ? विधवा । विधाताने मनुष्योंके किस अंगमें लेख किया है ? ललाटमें ॥ १४ ॥

का पाण्डुपत्नी ? गृहभूषणं किं ?
को रामशत्रुः ? किमगस्त्यजन्म ? ॥
कः सूर्यपुत्रो ? विपरीतपृच्छा
कुन्तीसुतोरावणकुंभकर्णाः ॥ १५ ॥

भावार्थ–इस श्लोकमें छे प्रश्न किये हैं और उनके उत्तर चौथे चरणमें दिये हैं. यथा–" १ कुंती, २ सुतो, ३ रावण, ४ कुंभ, ५ कर्ण, ६ कुंतीसुतोरावणकुंभकर्णाः " । पांडुकी स्त्री कौन है ? कुंती । घरका भूषण कौन है ? सुत (पुत्र) । रामका शत्रु कौन है ? रावण, अगस्त्यमु-

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

निका जन्मस्थान कौन कहा जाता है ? कुंभ ( घट )। सूर्यपुत्र कौन है ? कर्ण। विपरीत प्रश्न कौन है ? कुन्तीसुत रावणकुंभकर्ण १५

क्व वसति लघुजन्तुः किं निदानं हि वान्ते-
र्झटिति वद पशुं कं लंबकंठं वदन्ति ॥
प्रसवसमयदुःखं वेत्ति का कामिनीनां ?
तिलतुषपुटकोणे मक्षिकोष्ट्रं प्रसूता ॥ १६ ॥

भाषार्थ–इस श्लोकके तीनचरणोंमेंके चार प्रश्नोंका उत्तर चौथे चरणमें है. यथा–' १ तिलतुषपुटकोणे, २ मक्षिका, ३ उष्ट्रम्, ४ प्रसूता '। छोटा जीव कहां वसता है ? तिलकी भूमीके कौनेके मिलावमें. वान्ति ( वमन )में क्या निदान ( कारण ) है ? मक्खी. अर्थात् मक्खी खानेसे वमन होने लगता है। वह कौन पशु है, जिसको लंबकंठवाला कहते हैं, सो शीघ्र बताओ. ऊँट। स्त्रियोंमें कौन स्त्री प्रसव ( जन्म ) समयके दुःखको जानती है ? प्रसूता ॥ १६ ॥

कः कान्तारमगात्पितुर्वचनतः संश्लिष्य कंठस्थलीम् ?
कामी किं कुरुते ? च गृध्रहठतश्छिन्नं प्ररूढं च किम् ? ॥
का रक्षःकुलकालरात्रिरभवच्चन्द्रातपं द्वेष्टि को ?
रामश्चुम्बति रावणस्य वदनं सीतावियोगातुरः ॥ १७ ॥

भाषार्थ–इस श्लोकके तीनचरणोंमेंके पांच प्रश्नोंका उत्तर चौथे चरणमें है. यथा–" १ रामः, २ चुम्बति, ३ रावणस्य वदनम्, ४ सीता, ५ वियोगातुरः। " पिताके वचनसे वनको कौन गया ? राम। कंठमें लगाकर कामीजन क्या करता है ? चुम्बन। गीध ( जटायु ) ने हठसे किसको छिन्न भिन्न किया ? रावणके वदनको। राक्षसकुलकी

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

कालरात्रि कौन हुई ? सीता । चन्द्रमाकी चाँदनी किसको अच्छी नहीं लगती ? वियोगसे आतुरको, अर्थात् विरहीजनको ॥ १७ ॥

लंकाभूपनिशाचरो रघुपतिं युद्धे कथं दृष्टवान् ?
दीनं पाति पितेव यः पशुपतिः कस्तस्य वाहः प्रियः ? ॥
केनापूर्वफलं नरैः सुकृतिभिः कस्मिँस्थले भुज्यते ?
जारा ये भुवि तान्प्रशास्ति कतमो ? ह्येषामिहैवोत्तरम् १८

भावार्थ–इस श्लोकके चारौ चरणोंमें चार प्रश्न हैं. जिस चणरमें जो प्रश्न किया है उसी चरणमें उसका उत्तर है. परन्तु चरणके आदिके दो अक्षरोंको विलोम करके उत्तर निकलता है. जैसे–लंका–कालम् । दीनं–नंदी । केना–नाके ( स्वर्गे ) । जारा–राजा । १ लंकाका निशाचर राजा ( रावण ) युद्धमें रामचन्द्रजीको किस प्रकार देखता भया ? कालरूप । २ जो पशुपति ( महादेव ) दीनजनको पिताकी भांति पालता है, उसका प्यारा वाहन कौन है ? नंदी वृषभ । ३ मनुष्य अपने अच्छे कर्मोंका अपूर्व फल किस स्थानमें भोगता है ? नाके अर्थात् स्वर्गमें । ४ पृथ्वीपर जो जार लोग ( व्यभिचारी ) हैं उनको कौन दंड देता है ? राजा । इसप्रकार इनका उत्तर इसी श्लोकमें है १८

---

बहिरालाप–श्लोकाः ।

किमिच्छति नरः काश्यां ? भूपानां को रणे हितः ? ॥
को वन्द्यः सर्वदेवानां ? दीयतामेकमुत्तरम् ॥ १ ॥

भावार्थ–मनुष्य काशीमें क्या चाहता है, राजावोंको रणमें क्या हित है, सब देवतावोंमें कौन वन्दना करने योग्य है इन तीनौ प्रश्नोंका एक उत्तर दीजिये ‘ मृत्युंजयः ’ यथा–१ मृत्युम् , २ जयः, ३ मृत्युं-

---

१ बहिरालाप उसको कहते हैं जिसका उत्तर बाहरसे दिया जाय. श्लोकमें न हो ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

जयः ( महादेवः ) । मनुष्य काशीमें मृत्यु चाहता है. राजा रणमें जय चाहता है. देवतावोंमें वन्दना करने योग्य महादेवजी हैं ॥ १ ॥

बुधः कीदृग्वचो ब्रूते? को रोगी ? कश्च नास्तिकः ? ॥
कीदृक्चन्द्रं नमस्यन्ति? किं सूत्रं पाणिनेर्वद ॥ २ ॥

भाषार्थ–इस श्लोकमें पांच प्रश्न हैं. १ पंडित कैसा वचन बोलता है ? २ रोगी कौन है ? ३ नास्तिक कौन है ? ४ लोग कौनसे चन्द्रमाको नमस्कार करते हैं ? ५ पाणिनिका सूत्र कौन है सो इनके उत्तरमें कहो. 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' । १ अर्थवत्, २ अधातुः, ३ अप्रत्ययः, ४ प्रातिपदिकम्, ५ अर्थवदधातुरप्रत्ययप्रातिपदिकम् । पंडित अर्थवत् ( अर्थवाला ) वचन बोलता है. विना अर्थ नहीं बोलता. रोगी वही है, जो अधातु (बिगडे हुये धातुवाला )- अर्थात् शरीरका सार जिसका बिगड जाता है, वही रोगी हो जाता है । नास्तिक वही है, जो अप्रत्यय ( विश्वास, श्रद्धा, ज्ञान इनसे हीन )- अर्थात् ईश्वरादिमें जिसका विश्वास नहीं, श्रद्धा नहीं, ज्ञान नहीं है । उसी चन्द्रमाको लोग नमते हैं, जो प्रातिपदिक है अर्थात् प्रतिपदाके दिन द्वितीया तिथिसम्बधी चन्द्रमाको लोग नमस्कार करते हैं. जब कब चन्द्रदर्शनके समय द्वितीया नहीं होती है, तब दूसरे दिन लोग चन्द्रदर्शन करते हैं. परन्तु इस चन्द्रमाकी प्रातिपदिक संज्ञा है, अर्थात् इसको प्रातिपदिक कहते हैं. पाणिनीय व्याकरण ( अष्टाध्यायी ) का , अर्थवदधातुरप्रत्ययः प्रातिपदिकम् , यह सूत्र है ॥ २ ॥

भागीरथी कथंभूता ? कामिनी प्राह किं प्रियम् ? ॥
एकमेवोत्तरं देहि शास्त्रलौकिकभाषया ॥ ३ ॥

भाषार्थ–भागीरथी ( गंगा ) कैसी है ? कामिनी ( स्त्री ) प्रियको

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

क्या कहती है ? इन दोनौ प्रश्नोंका एकही उत्तर शास्त्र और लौकिक ( महाराष्ट्र ) भाषासे दीजिये. ( मलापहा ) । गंगा मलको दूर करती है. स्त्री अपने प्रियको महाराष्ट्रभाषामें ' मला पहा ' ( मुझे देखो ) कहती है ॥ ३ ॥

कस्मिन्स्वपिति कंसारिः ? का वृत्तिरधमा नृणाम् ? ॥
किं ब्रूते पितरं बालः ? किं दृष्ट्वा रमते मनः ? ॥ ४ ॥

भाषार्थ–इस श्लोकमें चार प्रश्न हैं. कंसारि ( कंसके शत्रु ' विष्णुभगवान् ' नारायण ) किसपर शयन करते हैं ? २ अधम मनुष्योंकी वृत्ति ( जीविका ) क्या है ? ३ बालक पिताको क्या कहता है ? ४ क्या देखकर मन रमता है ? उत्तर–शेषे सेवा वा पररूपम् । १ शेषे, २ सेवा, ३ वा, ४ पररूपम् । नारायण शेषशय्यापर शयन करते हैं. अधमजनकी जीविका सेवा है. पालक पिताको ' बा बा ' कहता है. पराया रूप देखकर मन रमता है ॥ ४ ॥

नीचेषु यावनी वाणी का ? कः स्याच्छुभदो जने ? ॥
शंभोरावरणं किं ? किं भजन्ते व्याधयो जनम् ? ॥ ५ ॥

भाषार्थ–इस श्लोकमेंभी चार प्रश्न हैं. नीचजनोंमें यावनी वाणी ( मुसलमानी भाषा ) क्या है ? २ मनुष्योंमें शुभदायक क्या है ? ३ शंभुजीका आवरण क्या है ? ४ किस मनुष्यको रोग घेरते हैं ? उत्तर–' अवेलाभोजिनम् ' । १ अबे, २ लाभः, ३ अजिनम्, ४ अवेलाभोजिनम् । नीचजनोंमें मुसलमानी भाषा ' अबे ' है. मनुष्योंमें शुभदायक ' लाभ ' है. शिवजीका आवरण ' अजिन ' ( मृग छाला ) है. रोग उसी मनुष्यको घेरते हैं, जो वेला ( समय ) पर भोजन नहीं करता है. कुसमय भोजन करनेसे मनुष्य रोगी हो जाता है ॥ ५ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

आनन्दयति कोऽत्यर्थं सज्जनानेव भूतले ॥ ?
प्रबोधयति पद्मानि ? तमांसि च निहन्ति कः ? ॥६॥

भाषार्थ-इस श्लोकमें तीन प्रश्न हैं. १ सज्जनोंको पृथिवीमें परम आनन्द क्या है ? २ कमलोंको कौन प्रफुल्लित करता है ? ३ अन्धकारको कौन दूर करता है ? उत्तर-'मित्रोदयः'। मित्रोंके आगमनसे अथवा मित्रोंकी बुद्धिसे सज्जन परम आनन्दित होते हैं. कमलोंको प्रफुल्लित करनेवाला और अन्धकारको दूर करनेवाला मित्रोदय है. ( मित्र नाम सूर्यका है ) अर्थात्, सूर्यका उदय होनेसे कमल खिल जाते हैं और अन्धकार नष्ट हो जाता है ॥ ६ ॥

को दुराढ्यस्य मोहाय ? का प्रिया मुरविद्विषः ? ॥
पदं प्रश्नवितर्के किं ? को दन्तच्छदभूषणम् ? ॥ ७ ॥

भाषार्थ-इस श्लोकमेंभी चार प्रश्न हैं. १ नीचतासे युक्त जनके मोहनिमित्त कौन वस्तु है अथवा कठिनतासे युक्त वस्तुको प्राप्त करानेवाला कौन है ? २ मुरारि ( हरिभगवान् ) की प्रिया कौन है ? ३ वितर्कमें कौन पद पूछा जाता है ? ४ दन्तच्छद ( होठ ) का भूषण क्या है ? उत्तर-'रामानुरागः'। राः ( धनम् ), मा ( लक्ष्मी ), नु ( इति वितर्के ), रागः ( आरक्तत्वम् ) । नीचजनको मोहनेवाला धन है. कठिनवस्तु धनसे प्राप्त हो जाती है. हरिभगवान्की प्रिया लक्ष्मी है. वितर्कमें 'नु' यह शब्द कहा जाता है. होठोंकी शोभा आरक्तत्व है ॥ ७ ॥

किं मुंचंति पयोवाहाः ? कीदृशी हरिवल्लभा ? ॥
पूजायां किं पदं ? कोऽग्निः ? कः कृष्णेन हतो जनः ? ८

भाषार्थ-इस श्लोकमेंभी पांच प्रश्न हैं. १ मेघ क्या छोडते हैं ?

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

१ हरिकी प्यारी कैसी है ? ३ पूजामें कौन पद उच्चारण होता है ? ४ अग्निका पद कौन है ? ५ कृष्णचन्द्रने किस जनको मारा ? उत्तर 'कंसासुरः'। कं (जलम्), सा (एव) कृष्णेन सह वर्तमाना 'लक्ष्मी' सुः (पूजायाम्), रः (अग्निः), 'कंसासुर' एतन्नामा दैत्यः। मेघ जल छोडते हैं. हरिकी प्यारी लक्ष्मी है. पूजामें 'सुः' पद उच्चारण होता है 'रः' यह अग्निबीज है. कृष्णचन्द्रजीने कंसासुरको मारा ॥ ८ ॥

को विख्यातावहेः शत्रू ? शोकं वदति किं पदम् ? ॥
कोऽभीष्टोऽतिदरिद्रस्य ? सेव्यते कं च भिक्षुभिः ? ॥ ९ ॥

भाषार्थ—इस श्लोकमें चार प्रश्न हैं. १ सांपके शत्रु कौन दो पक्षी हैं ? २ शोकके समय कौन पद उच्चारण किया जाता है ? ३ अतिदरिद्रको क्या अभीष्ट है ? ४ भिक्षुकजनोंकरके कौन सेवनीय है ? उत्तर— 'वीहाराः'। विश्व विश्व वी (गरुडमयूरौ), 'हा' इति खेदे, राः (द्रव्यम्) वीहाराः (तीर्थभूमयः)। सांपके शत्रु गरुड और मोर ये दो पक्षी हैं। शोकमें 'हा' कहते हैं। 'हा' यह पद शोक होनेपर उच्चारण किया जाता है। अतिदरिद्री द्रव्य चाहता है। भिक्षुकजन तीर्थभूमिसेवन करते हैं ॥ ९ ॥

सानुजः काननं गत्वा नैषकेयाञ्जघान कः ? ॥
मध्ये वर्णत्रयं दत्त्वा रावणः कीदृशो वद ? ॥ १० ॥

भाषार्थ—अनुजसमेत वनको जाकर राक्षसोंको मारा सो कौन है ? इसके मध्यमें तीन अक्षर देकर, रावण किसप्रकार है सो बताओ. उत्तर—'राक्षसोत्तमः' (राक्षसोंमें उत्तम रावण) 'राक्षसोत्तमः' इसके बीचमेंके तीन अक्षर 'रामः' के मध्यमें मिला देनेसे 'राक्षसोत्तमः' यह शब्द बन गया ॥ १० ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

को नयति जगदशेषं ? क्षयमथ बिभरांबभूव कं विष्णुः ? ॥
नीचः कुत्र सगर्वः ? पाणिनिसूत्रं च कीदृक्षम् ॥ ११ ॥

भाषार्थ—इस श्लोकमें चार प्रश्न हैं. १ अशेष ( समस्त ) जगत्को कौन क्षय ( दंडित ) करता है ? २ विष्णुने किसको धारण किया था ? ३ नीचजन कहां गर्ववाला हो जाता है ? ४ इनके उत्तरमें पाणिनिसूत्र कौनसा है ? उत्तर—' यमोऽगन्धने ' । यमः, अंग ( गोवर्धनम् ), धने । यमोऽगन्धने । समस्त जगत्को दंडित करनेवाला ' यम ' है. श्रीकृष्णचन्द्रजीने गोवर्धनपर्वतको धारण किया था. नीचजन धन पानेपर अभिमानी हो जाता है. पाणिनीयव्याकरणमें " यमोऽगन्धने " यह सूत्र इनके उत्तरमें है ॥ ११ ॥

राज्ञः संबोधनं किं स्यात् ? सुग्रीवस्य तु का प्रिया ? ॥
अधनास्तु किमिच्छन्ति ? आर्तैः किं क्रियते वद ॥१२

भाषार्थ—राजाका संबोधन क्या है ? सुग्रीवकी प्रिया कौन है ? धनहीन पुरुष क्या चाहते हैं ? आर्तजनोंकरके क्या किया जाता है ? उत्तर—" देवताराधन " चार प्रश्नोंका उत्तर इस प्रकार है कि—' १ देव, २ तारा, ३ धन, ४ देवताराधन।' राजाका संबोधन ' देव ' है. सुग्रीवकी प्रिया ' तारा ' है. धनहीन पुरुष ' धन ' चाहते हैं. पीडितजन ' देवताराधन ' करते हैं ॥ १२ ॥

मेघात्यये भवति किं सुभगावगाहं
का वा विडम्बयति वारणमल्लवेश्याः ।
दुर्वारवीर्यविभवस्य भवेद्रणे कः
काः स्मेरवक्त्रसुभगास्तरणिः प्रभाभिः ॥ १३ ॥



CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

भाषार्थ-मेघद्वारा पूर्णजलप्रवाहसे सुशोभित कौन होता है ? कौन सुन्दरी वेश्या कब विडम्बनाको प्राप्त होती है ? रणमें महाबली पुरुष कौनसे विभवको प्राप्त होता है ? सूर्यकी प्रभाओंसे कौन खिलकर शोभाको प्राप्त होता है ? इन चार प्रश्नोंका उत्तर 'सरोजराजयः' यह है । १ सरस्तडागम्, २ जरा ( वयोहानिः ) ३, जयः, ४ सरोजराजयः ( कमलश्रेणयः ) । मेघद्वारा तडाग जलसे पूर्ण होकर शोभाको प्राप्त होता है. सुन्दरी वेश्या अवस्था क्षीण होनेपर विडम्बनाको प्राप्त होती है. रणमें महाबली पुरुष जयको प्राप्त होता है. सूर्यकी किरणोंसे कमलपंक्तियां खिलकर शोभाको प्राप्त होती हैं ॥ १३ ॥

आगे चार श्लोक केवल टिप्पणीमात्रसे लिखते हैं ।[1]

कल्याणवाक् त्वमिव किं पदमत्र कान्तं ?
मद्भूपते त्वमिव कः परितोषकारी ? ॥
कः सर्वदा वृषगतिस्त्वमिवार्तिमात्रं ?
भूत्याश्रितः कथय पालितसर्वभूतः ॥ १४ ॥

टिप्पणी-शंकरः । १ शं ( सुखम् ), २ करो ( राजभागः ), ३ शंकरो ( महादेवः ) ॥ १४ ॥

इस श्लोकमें तीन प्रश्न हैं. तीनोंका उत्तर टिप्पणीमें अंकानुसार जानो ॥ १४ ॥

सूर्यस्य का तिमिरकुंजरवृन्दसिंही ?
सत्यस्य का सुकृतवारिधिचन्द्रलेखा ? ॥
पार्थश्च कीदृगरिदावहुताशनोऽभूत् ।
का मालती कुसुमदामहरस्य मूर्ध्नि ? ॥ १५ ॥

---

१ इससे आगे चार श्लोकोंकी टीका विस्तारभयसे नहीं लिखी. और इनके भाषान्तरसे इतना आनन्द नहीं कि-जितना केवल टिप्पणीमात्रसे है ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

टिप्पणी–'भागीरथी'। १ भाः (कान्तिः), २ गीः (वाणी), ३ रथी (रथो विद्यते यस्य सः रथी), ४ भागीरथी (गंगा) ॥१५॥

इस श्लोकमें चार प्रश्न हैं. चारौ प्रश्नोंका उत्तर टिप्पणीमें अंकानुसार जानौ ॥ १५ ॥

कः खे भाति हतो निशाचरपतिः केनाम्बुधौ मज्जतिः।
कः कीदृग्तरुणी विलासगमनं को नाम राज्ञां प्रियः॥
पत्रं किं नृपतेः किमप्सु ललितं को रामरामाहरो।
मत्प्रश्नोत्तरमध्यमाक्षरपदं यत्तत्तवाशीर्वचः ॥ १६ ॥

टिप्पणी–१ ग्रहेशः, २ रामेण, ३ मैनाकः, ४ मंथरं, ५ सचिवः ६ तुरंगः, ७ राजीवं, ८ रावणः। एतन्मध्यमाक्षरघटितं वाक्यं 'हे मे नाथ! चिरंजीव!' इति राजानं प्रति आशीर्वचनम् ॥ १६ ॥

इस श्लोकमें आठ प्रश्न हैं. आठौ प्रश्नोंके उत्तरोंको अंकानुसार जानौ. उनके मध्यके अक्षर लेके राजाके प्रति आशीर्वादवचन है ॥ १६ ॥

क्षोणी कंसहते करोति दिवि का नृत्यं शिवायाः पति-।
र्भूतानां कमयुंक्त जीवहरणे का रामशत्रोः पुरी॥
कं रक्षन्ति च साधवः पशुपतेः किं वाहनं प्रोच्यता-।
मालोमप्रतिलोमशास्त्रचतुरैरेकं द्वयोरुत्तरम् ॥ १७ ॥

टिप्पणी–१ भारं, २ रंभा, ३ कालं, ४ लंका, ५ दीनं, ६ नंदी १७

इस श्लोकमें छे प्रश्न हैं. सबका उत्तर अंकानुसार जानै. आलोमप्रतिलोम करके दो दो अक्षरोंका उत्तर है ॥ १७ ॥

---

प्रश्नोत्तरश्लोकाः।

कियन्मात्रं जलं? विप्र! जानुदघ्नं नराधिप!॥
तथापीयमवस्था ते नहि सर्वे भवादृशाः॥ १ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

टिप्पणी—प्रथमपादस्तृतीयपादश्च नदीमुत्तितीर्षोर्भोजस्योक्तिः । द्वितीयपादश्चतुर्थपादश्च राजदर्शनार्थं छद्मना काष्ठभारवाहपण्डितस्य प्रत्युक्तिः ॥ १ ॥

इस श्लोकमें राजा भोजका प्रश्न है और राजदर्शनार्थ लकडेहरेके रूपमें एक पंडितका उत्तर है. पहले तीसरे पादमें राजाने प्रश्न किया और दूसरे व चौथे चरणमें पंडितने उत्तर दिया ॥ १ ॥

भवित्री रंभोरु त्रिदशवदनग्लानिरधुना ॥
स रामो मे स्थाता न युधि पुरतो लक्ष्मणसखः ॥
इयं यास्यत्युच्चैर्विपदमधुना वानरचमू-
र्लघिष्ठेदं षष्ठाक्षरपरविलोपात्पठ पुनः ॥ २ ॥

टिप्पणी—प्रतिचरणसप्तमाक्षरविलोपाद्द्वितीयोऽर्थ उद्भवति । पूर्वचरणत्रयं रावणस्य सीतां प्रति उक्तिः । चतुर्थचरणस्तु तस्याः प्रत्युत्तरम् ॥२॥

इस श्लोकमें तीन चरण रावणके प्रश्नरूप हैं. चौथे चरणमें सीताजीने उत्तर दियां है. यह श्लोक हनुमन्नाटकमेंका है ॥ २ ॥

---

भाषाचित्र—श्लोक ।

हरनयनहुताशज्वालया जो जलाया ।
रतिनयनजलौघैः खाक वाकी बहाया ॥
तदपि दहति चित्तं माक क्या मैं करोंगी ।
मदनसरसि भूयः क्या बला आग लागी ॥ १ ॥

दृष्ट्वा तत्र विचित्रतां सुमनसा मैं था गया बागमें ।
काचित्तत्र कुरंगशावनयनी गुल तोडती थी खडी ॥
उन्नद्भ्रूधनुषा कटाक्षविशिखैः घायल किया था मुझे ।
तत्रासीन्महती विमोहजलधौ है दिलगुजारी शुकर ॥ २ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

उपरोक्त दोनौं श्लोकोंका अर्थ बहुत सरल है, इससे नहीं लिखा १२

संस्कृतचित्र—श्लोक।

रसासार रसासार सायताक्ष क्षतायसा।
सातावात तवातासा रक्षतस्त्वस्त्वतक्षर॥ १॥
नमामि मामनो नुन्नमानं मुनिममानिनम्।
नानाननममानाममों नामानमुमेनमुम्॥ २॥
तंभूतामुक्तिमुदारहासं वंदे यतो भव्यभवं दयाश्री।
श्रीयादवं भव्यमतो यदेवं संहारदामुक्तिमुतासुभूतम्॥३॥
चिरं विरंचिर्न चिरं विरंचि साकारता सत्यसतारका सा।
साकारतासत्यसतारकासा चिरं विरंचिर्नचिरं विरंचि॥४

उपरोक्त चार श्लोकोंमेंसे पहला श्लोक चन्द्रदेवकृत है. इस श्लोकमें राजाको आशीर्वाद दिया है और उपदेशभी किया है। दूसरा श्लोक शार्ङ्गधरकृत है. इसमें हरिहर भगवान्को नमस्कार किया है. तीसरा और चौथा श्लोक रामकृष्णविलोमकाव्यका पहला दूसरा श्लोक है. आधे श्लोकोंमें रामचरित्र है, आधे श्लोकमें कृष्णचरित्र है. इन श्लोकोंमें संस्कृतवेत्ताओंको परम आनन्द आता है. भाषा जाननेवालेको नहीं आता।

अथ नवरसवर्णनम्।

शृंगारवीरकरुणाद्भुतहास्यभयानकाः।
बीभत्सरौद्रशांताश्च नवधा कीर्तिता रसाः॥ १॥

१ रामकृष्णविलोमकाव्यका भाषानुवाद करके हमने हरिप्रसादभगीरथजीको छापनेनिमित दिया है. बहुतही उत्तम काव्य सूर्यकविकृत है।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

भाषार्थ—१ शृंगार, २ वीर, ३ करुण, ४ अद्भुत, ५ हास्य, ६ भयानक, ७ बीभत्स, ८ रौद्र, ९ शान्त ये नवरस कहे हैं ॥ १ ॥

तत्रादौ शृंगाररसनिर्देशे कामदेवप्रशंसा ।

एकं वस्तु द्विधा कर्तुं बहवः सन्ति धन्विनः ।
धन्वी स मार एवैको द्वयोरैक्यं करोति यः ॥ १ ॥

भाषार्थ—एक वस्तुके दो खंड करनेको बहुतसे धनुर्धारी हैं. परन्तु यह कामदेव ऐसा धनुर्धर है कि जो दो वस्तुओंको एक कर देता है, अर्थात् स्त्रीपुरुषरूप जोडाको एकमनवाला कर देता है ॥ १ ॥

---

स्त्रीप्रशंसा ।

न हयैर्नच मातङ्गैर्न रथैर्न च पत्तिभिः
स्त्रीणामपांगदृष्टचैव जीयते जगतां त्रयम् ॥ २ ॥

भाषार्थ—यह जगत् न घोडोंसे, न हाथियोंसे, न रथीजनोंसे और न पैदलोंसे इसप्रकार जीता गया, जैसा कि स्त्रियोंके केवल दृष्टिसेही तीनौं लोक जीत लिये गये हैं ॥ २ ॥

स्त्रियः पवित्रमतुलं नैता दुष्यन्ति कर्हिचित् ।
मासि मासि रजो यासां दुष्कृतान्यपकर्षति ॥ ३ ॥

भाषार्थ—स्त्रियां परम पवित्र हैं. इनको कोईभी दोषयुक्त नहीं समझते हैं. क्योंकि, महीना महीनामें उनका पाप रजद्वारा निकल जाता है ॥ ३ ॥

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्तां स्तुवे वामलोचनाः ॥ ४ ॥

भाषार्थ—भगवान् शंकरने अपनी दृष्टिसे दग्ध किये हुए कामदेवको

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

स्त्रियां अपनी दृष्टिसेही फिर जिवित करती हैं। इसप्रकार शंकरको जीतनेवाली स्त्रियोंकी मैं स्तुति करता हू॥ ४॥

सोमः शौचं ददौ तासां गन्धर्वाश्च शुभां गिरम्।
अग्निः सर्वांगकान्तित्वं तस्मान्निष्कसमाः स्त्रियः॥ ५॥

भाषार्थ–स्त्रियोंको सोमदेव शौचप्रदान करता भया, गन्धर्व उत्तम वाणी और अग्निदेव सब अंगोंमें कान्तिप्रदान करता भया. इसकारण स्त्रियां निष्कसमान ( सुवर्णसदृश ) हैं॥ ५॥

प्राणानां च प्रिया याश्च मूढाः सादृश्यकारिणः।
प्रिया कंठगता रत्यै प्राणा मरणहेतवः॥ ६ ॥

भाषार्थ–मूढलोग प्राण और प्रियाको समानभावसे मानते हैं, अर्थात् प्राण और प्रियाकी एक तुलना करते हैं. प्रिया रतिकरके कंठगत होती है, अर्थात् कण्ठगत होनेसे प्रिया प्रीतिको बढाती है और प्राण कंठगत होनेसे मरणका हेतु है. अर्थात् कंठगत प्राण होनेसे मनुष्य मृत्युको प्राप्त होता है॥ ६॥

यासामञ्चलवातेन दीपो निर्वाणतां गतः।
तासामालिङ्गने पुंसां नरके पतनं कुतः?॥ ७॥

भाषार्थ–जिनके अंचलकी वायुसे दीपक निर्वाण ( शान्ति )को प्राप्त होता है, तो उनके आलिंगनमें पुरुषोंको नरकमें गिरना कैसा?॥ ७॥

नामृतं न विषं किंचिदेकां भुक्त्वा नितम्बिनीम्॥
यस्याः संगेन जीव्येत म्रियत च वियोगतः॥ ८॥

भाषार्थ–एक स्त्रीको छोडकर और कोई न अमृत है, न विष है. क्योंकि–जिसके संगसे मनुष्य जी जावै और वियोगसे मर जावै॥ ८॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

अमृतस्येव कुण्डानि रत्नानामिव राशयः ।
रतेरिव निधानानि योषितः केन निर्मिताः ? ॥९॥

भाषार्थ–अमृतके मानों कुंड, रत्नोंकी मानों राशियां, रतिके मानों निधान ( कुबेरके भंडार ) ऐसी स्त्रियां किसने बनाई ? ॥ ९ ॥

हरिणप्रेक्षणा यत्र गृहिणी न विलोक्यते ।
सेवितं सर्वसम्पद्भिरपि तद्भवनं वनम् ॥ १० ॥

भाषार्थ–जहां ( जिस घरमें ) मृगनयनी स्त्री नहीं है, सम्पूर्ण सम्पदाओंसे युक्त होनेपरभी वह घर वन है ॥ १० ॥

यावद्दृष्टिर्मृगाक्षीणां नो नरीनर्ति भङ्गुरा ।
तावज्ज्ञानवतां चित्ते विवेकः कुरुते पदम् ॥ ११ ॥

भाषार्थ–जबतक मृगनयनी स्त्रियोंकी बाँकी चितवन सामने नहीं नाचती, तभीतक ज्ञानियोंके चित्तमें विवेक स्थान पाता है ॥ ११ ॥

यासां नाम्नापि कामः स्यात्संगमं दर्शनं विना ॥
तासां दृक्संगमं प्राप्य यन्न द्रवति कौतुकम् ! ॥ १२ ॥

भाषार्थ–जिनके नामसेही काम प्रगट हो जाता है और विना दर्शन कियेही संगम हो जाता है, उनके नेत्रसंगमको प्राप्त होकर अर्थात् उनको देखकर, जो नहीं द्रवै तो आश्चर्यकी बात है ! ॥ १२ ॥

प्रभवति मनसि विवेको विदुषामपि शास्त्रसंभवस्तावत् ।
निपतन्ति दृष्टिविशिखा यावन्नेन्दीवराक्षीणाम् ॥१३॥

भाषार्थ–पंडितोंकेभी मनमें शास्त्रोंसे उत्पन्न ज्ञान तबतक होता है, जबतक कमलसमान नेत्रोंवाली स्त्रियोंके कटाक्षरूपी बाण नहीं गिरते हैं, अर्थात् जबतक सुन्दरी स्त्रियोंके कटाक्ष बाणोंकी बौछार नहीं होती तभीतक पंडितोंके मनमें शास्त्रज्ञान ठहरता है ॥ १३ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

तावदेव कृतिनां हृदि स्फुरत्येष निर्मलविवेकदीपकः ।
यावदेव न कुरंगचक्षुषां ताड्यते चपललोचनाञ्चलैः १४

भाषार्थ–साधुजनोंके हृदयमेंभी निर्मल ज्ञानदीपक तभीतक प्रकाश करता है, जबतक मृगनयनियोंके कटाक्ष ( तिरछी चितवन ) की मार नहीं पडती है ॥ १४ ॥

तावदेव विदुषां विवेकिनी बुद्धिरस्ति भवबन्धभेदिनी ।
यावदिन्दुवदना न कामिनी वीक्षिता रहसि हंसगामिनी १५

भाषार्थ–पंडितोंकी बुद्धि तभीतक ज्ञान और विचारवाली तथा संसारके बन्धनोंको छेदन करनेवाली है. जबतक चन्द्रमुखी हंसगामिनी स्त्री एकान्तमें नहीं देखी ॥ १५ ॥

उडुराजमुखी मृगराजकटिर्गजराजविराजितमन्दगतिः ।
यदि सा वनिता हृदयेनिहिता क्वजपः क्व तपः क्वसमाधिविधिः

भाषार्थ–चन्द्रमाके समान मुखवाली अर्थात् चन्द्रवदना और मृगराज ( सिंह ) के समान कटिवाली अर्थात् पतली कमरवाली, तथा गजराजकी भांति मन्दगतिसे शोभावाली अर्थात् मन्दमन्द गमन करनेसे परमशोभावाली चाल जिसकी ऐसी स्त्री, यदि हृदयमें वस गई तब कहां जप, कहां तप और कहां समाधिविधि ? ॥ १६ ॥

आस्यं सहास्यं नयनं सलास्यं
सिन्दूरबिन्दूदयशोभि भालम् ।

1 'रतिः' इत्यपि पाठः ।



CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

नवा च वाणी हरिणीदृशश्चे-
दन्यैरगण्यैरपि भूषणैः किम् ? ॥ १७ ॥

भावार्थ–हास्ययुक्तमुख अर्थात् मन्द मुसक्यानवाला मुखारविन्द, शीलयुक्त अथवा रसीले और लाजभरे नयन, तथा बाँकी चितवन, मस्तकपर सिन्दूरके बिन्दुकी शोभा, अर्थात् सिन्दूरके बिन्दुसे शोभावाला मस्तक, शिरपर नवीन वेणी ( चोटी ), हरिणीके समान नेत्र अर्थात् कटाक्षवाली ऐसी शोभा यदि स्त्रीमें हो तो, उसके निमित्त अन्य अनेक आभूषणोंकी क्या आवश्यकता है ? ॥ १७ ॥

उपनिषदः परिपीता गीतापि च हन्त ! मतिपथं नीता ॥
तदपि न हा ! विधुवदना मानससदनाद्बहिर्याति ॥ १८ ॥

भावार्थ–उपनिषद्विद्याको भलीभांति पान कर लिया और गीताकोभी बुद्धिद्वारा भलीभांति विचारा, तोभी हा ! बडे खेदकी बात है कि–चन्द्रमुखी स्त्री मनरूपी घरसे बाहर नहीं निकलती है ॥ १८ ॥

मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमिदं वदन्तु ॥
सेव्या नितंबा किमु भूधराणामुत स्मरस्मेरविलासिनीनाम्

भावार्थ–हे श्रेष्ठपुरुषो ! द्वेषभावको त्यागकर और कार्यको विचारकर, मर्यादसहित यह बताओ कि–पर्वतोंके नितम्ब सेव्य हैं, अथवा स्त्रीजनोंके नितम्ब सेव्य हैं ॥ १९ ॥

अदर्शने दर्शनमात्रकामा दृष्ट्वा परिष्वंगरसैकलोलाः ॥
आलिङ्गितायां पुनरायताक्ष्यामाशास्महे विग्रहयोरभेदम् २०

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

भाषार्थ-जबतक दर्शन नहीं होता तबतक दर्शनमात्रकी इच्छा होती है, कि-हमको दर्शन हो जाय. जब दर्शन हो जाता है तब आलिंगनरसकी इच्छा होती है और जब आलिंगनरस प्राप्त हो जाता है, तब हम यह चाहते हैं कि-यह विशालनेत्रोंवाली अब हमारे शरीरसे विलग न होवै ॥ २० ॥

नूनं हि ते कविवरा विपरीतबोधा
ये नित्यमाहुरबला इति कामिनीस्ताः ॥
याभिर्विलोलतरतारकदृष्टिपातैः
शक्रादयोऽपि विजितास्त्वबलाः कथं ताः २१

भाषार्थ-निश्चयकरके वे कविवर विपरीतबोधवाले हैं, जो सर्वदा उन स्त्रियोंको 'अबला ( बलहीन )' कहते हैं. जिन स्त्रियोंने अतिचंचल दृष्टि डालकरके इन्द्रादिक देवताओंकोभी जीत लिया है, वे अबला कैसे हो सकती हैं ? उनको तो 'सबला' हि कहना चाहिये २१

विश्वामित्रपराशरप्रभृतयो वाताम्बुपर्णाशना-
स्तेऽपि स्त्रीमुखपङ्कजं सुललितं दृष्ट्वैव मोहं गताः ॥
शाल्यन्नं सघृतं पयोदधियुतं ये भुञ्जते मानवा-
स्तेषामिन्द्रियनिग्रहो यदि भवेद्विन्ध्यस्तरेत्सागरम् २२

भाषार्थ-विश्वामित्रपराशर आदि मुनिजन-जो वायु, जल और वृक्षोंके पत्ते खाकर रहनेवाले वेभी-स्त्रीके सुन्दर मुखकमलको देखतेही मोहको प्राप्त हो गये. तब जो चावलोंमें घी-दूध मिलाकर खाते हैं और दहीसहित चावल भोजन करते हैं, उन मनुष्योंसे यदि इन्द्रियनिग्रह होवै, अर्थात् ऐसे मनुष्य यदि इन्द्रियोंको रोक लेवैं, तो ऐसा मानों

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

कि–विन्ध्याचल समुद्रको तर गया ! सारांश यह कि–इन्द्रियोंको रोकना महाकठिन काम है ॥ २२ ॥

न देवकन्यका नापि गन्धर्वकुलसंभवा ॥
तथाप्येषा तपोभङ्गं विधातुं वेधसोऽप्यलम् ॥२३॥

भाषार्थ–न देवकन्या है, न गन्धर्वकुलमें उत्पन्न है. तोभी यह स्त्री विधिकेभी तपका भङ्ग करनेको समर्थ है ॥ २३ ॥

मन्दमन्दगमना करिणी किं ? वा विशालनयना हरिणी किम्?
पूर्णचन्द्रमदना रजनी किं?पश्य गच्छति सखे!तरुणीकिम्२४

भाषार्थ–मन्दमन्द गमन करनेवाली क्या करिणी है, अथवा विशालनेत्रोंवाली क्या हरिणी है, किंवा पूर्णचन्द्रमावाली क्या रजनी है ? हे सखे ! देख, क्या तरुणी जा रही है ? ॥ २४ ॥

---

स्त्रीस्वभावनिन्दा ।

अनृतं साहसं माया मूर्खत्वमतिलोभता ॥
अशौचं निर्दयत्वं च स्त्रीणां दोषाः स्वभावजाः२५॥

भाषार्थ–१ अनृत ( झूंठ ), २ साहस ( सहसा काम कर बैठना ), ३ माया ( छल ), ४ मूर्खता, ५ अधिक लोभ करना, ६ अपवित्रता, ७ दयाहीन होना स्त्रियोंके ये दोष स्वाभाविक हैं ॥ २५ ॥ तुलसीकृतरामायणमेंभी लिखा है कि–

नारिस्वभाव सत्य कवि कहहीं । औगुण आठ सदा उर रहहीं ॥

---

स्त्रीके स्वभावका वर्णन इस कारण यहां किया है कि–जिससे सज्जन स्वभावकी खोटी स्त्रियोंसे बचे रहें और अपनी स्त्रियोंके स्वभावको ठीक करें ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

सहसा, अनृत, चपलता, माया, । भय, अविवेक, अशौच, अदाया ॥
परंतु ये स्वभाव खोटी स्त्रियोंके हैं।

कामनाम्ना किरातेन वितता मूढचेतसाम् ॥
नार्यो नरविहंगानामङ्गबन्धनवागुराः ॥ २६ ॥

भाषार्थ–कामनामवाले भीलने मूढचित्तवाले मनुष्यरूप पक्षियोंका अंग बांधनेको स्त्रीरूपी पाश (जाल) फैला रक्खा है. अर्थात् मनुष्योंके बांधनेको स्त्रीरूपी जाल कामदेवने फैलाया है ॥ २६ ॥

यो मोहान्मन्यते मूढो रक्तेयं मम कामिनी ॥
स तस्या वशगो नित्यं भवेत्क्रीडाशकुन्तवत् ॥ २७ ॥

भाषार्थ–जो मूढ मनुष्य, मोहसे ऐसा मानता है कि–'यह कामिनी (स्त्री) मुझपर आसक्त है' वह मनुष्य इसप्रकार सदैव उसके वशीभूत हो जाता है. जिस प्रकार क्रीडा (खेल) वाला पक्षी वशमें हो जाता है ॥ २७ ॥

दर्शनाद्धरते चित्तं स्पर्शनाद्धरते धनम् ॥
संगमाद्धरते सत्वं नारी प्रत्यक्षराक्षसी ॥ २८ ॥

भाषार्थ–दर्शनसे चित्तको ग्रसती है, अर्थात् दर्शनमात्रसेही मनको मोह लेती है और स्पर्श (छूने) से धनको हर लेती है, तथा संगमसे बलको हर लेती है. नारी (स्त्री) प्रत्यक्ष राक्षसी है ॥ २८ ॥

नासां कश्चिदगम्योऽस्ति नासां च वयसि स्थितिः ॥
विरूपं रूपवन्तं च पुमानित्येव भुञ्जते ॥ २९ ॥

भाषार्थ–स्त्रियोंको कोईभी अगम्य नहीं है और न अवस्थाकी

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

